e-Pathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रसंख्या (Paper Number) | 1 | |
| पत्रविषयः (Title) | वैदिकभाषा तथा वाङ्मयं च<br>(Vedic Language & Literature ) | |
| पाठ्यांशसंख्या पाठ्यांशनाम च<br>(Module Number& Module Name) | 01, ऋग्वेदस्य परिचयः- अश्विनोः सूक्तम्<br>(Introduction to *Rigveda* and mantras of *Ashvinoh suktam*) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | • **ऋग्वेदस्य परिचयः**<br>• **ऋग्वेदस्य महत्त्वम् इत्यादि।** | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो.हरिहरत्रिवेदी,<br>आचार्यः, पौरोहित्यविभागस्य,<br>श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | **डॉ. गोपालप्रसादशर्मा**<br>सहाचार्यः, वेदविभागस्य,<br>श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 | प्रो. पी.एन्.शास्त्री,<br>कुलपतिः,<br>राष्ट्रियसंस्कृतसंस्थानम्<br>नवदेहली |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P1_M01 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची-

## १. प्रस्तावना

भारतीयवाङ्मये वेदानां स्थानं सर्वोपरि वर्तते। भारते धर्मव्यवस्था वेदाधारिता वर्तते। यथोक्तं मनुस्मृतौ ''वेदोऽखिलो धर्ममूलम्'' (म.स्मृ. 2.7) इति। अतएव धर्मव्यस्थासु वेदानां स्वतन्त्ररूपेण प्रामाण्यं वर्तते। स्मृत्यादीनां प्रामाण्यं वेदमूलकतया एव स्वीक्रियते। यत्र उभयोः विरोधो दृश्यते तत्र श्रुतेः एव प्रामाण्यं स्वीकर्तव्यम् इति मीमांसकाः वदन्ति। मीमांसकानां मते वेदाः अपौरुषेयाः सन्ति। अर्थसंग्रहे लौगाक्षिभास्करेण कथितम्- ''अपौरुषेयं वाक्यं वेदः'' इति। मंत्रब्राह्मणरूपेण वेदानां द्विधा विभजनं प्राचीनाचार्यैः कृतमस्ति।

ऋग्वेदस्य प्रथममण्डलस्य षोडशाधिकैकशततमं सूक्तम् 'अश्विनोः सूक्तम्' इति नाम्ना बोध्यते। पञ्चविंशतिः ऋचात्मकम् इदं सूक्तम्। अस्य सूक्तस्य कक्षीवान् ऋषिः त्रिष्टुप् छन्दः अश्विनौ देवता। इदं सूक्तं प्रातरनुवाकस्य आश्विने क्रतौ विनियुक्तम् अस्ति।

## २. ऋग्वेदस्य परिचयः-

आदौ वेदः एक एव आसीत्। द्वापरान्ते कृष्णद्वैपायनेन आगामिनि कलियुगे मानवबुद्धेः शैथिल्यं स्वप्रज्ञया ज्ञात्वा वेदविभजनं कृतम्। 'व्यस्यति वेदान् इति व्यासः' इति व्यासशब्दस्य निर्वचनं महाभारते दृश्यते।

**यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः।**
**लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च॥**

(म.भा. 1.105.14)

भगवान् वेदव्यासः ऋग्यजुः सामार्थवणां मंत्राणां राशीन् तत्तत्प्रकरणभेदैः उद्धृत्य तैः मंत्रैः चतस्रः संहिताः चक्रे। ततो भगवान् वेदव्यासः चतुरः प्रगल्भान् शिष्यान् आहूय तेभ्यः एकैकां संहितामदात्। तस्मिन् क्रमे पैलाय ऋग्वेदं ददौ। पैलः स्वशिष्यान् तम् अध्यापयामास। ऋग्वेदस्य एकविंशतिः शाखाः सन्ति, यथा महाभाष्ये पस्पशाह्निके प्रतिपादितम्- ''एकविंशतिधा बाह्वृच्यम्''। इदानींतने समये शाकल- बाष्कल- शांखायना- श्वलायनेति एताः चतस्रः शाखाः एव ऋग्वेदस्य उपलभ्यन्ते। अध्ययनाध्यापनक्रमे शाकलशाखा आधिक्येन प्रचलिता वर्तते।

ऋग्वेदे दश मण्डलानि, अष्टौ अष्टकाः, 10,5801/4 मंत्राः सन्ति इति चरणव्यूहपरिशिष्टे प्रथमे ऋग्वेदखण्डे वर्णितम्।

**ऋचां दश सहस्राणि ऋचां पञ्चशतानि च।**
**ऋचामशीतिपादश्चैतत्पारायणमुच्यते॥**

इदं शौनकीयचरणव्यूहोक्तपाठानुसारं परिगणनं वाष्कलादिशाखान्तरस्य पाठमाश्रित्य कृतमिति संभाव्यते।

महामहोपाध्यायेन श्रीविद्याधरशर्मणा कात्यायनश्रौतसूत्रस्य भूमिकायाम् इदं लिखितं दृश्यते– ''ऋग्वेदे चतु:षष्ट्यध्याया:, अष्टावष्टकानि, दश मण्डलानि, षडुत्तरं सहस्रद्वयं वर्गा:, सहस्रं सूक्तानि, पञ्चाशीतिरनुवाका:, दशसहस्राणि चत्वारिंशदधिकानि चतु:शतं च मंत्रा: इति। इदमपि परिगणनं शाखान्तरीयं भवितुमर्हति। ऋग्वेदे शाकलशाखायां मण्डलानुसारेण मंत्रसंख्याया: तालिका एवमस्ति–

| **मण्डलानि** | **सूक्तसंख्या** | **मंत्रसंख्या** |
|---|---|---|
| प्रथममण्डलस्य | 191 | 2006 |
| द्वितीयमण्डलस्य | 43 | 429 |
| तृतीयमण्डलस्य | 62 | 617 |
| चतुर्थमण्डलस्य | 58 | 589 |
| पञ्चमममण्डलस्य | 87 | 727 |
| षष्ठमण्डलस्य | 75 | 765 |
| सप्तममण्डलस्य | 104 | 841 |
| अष्टममण्डलस्य | 92 | 1636 |
| नवममण्डलस्य | 114 | 1108 |
| दशममण्डलस्य | 191 | 1754 |
| वालखिल्यसूक्तानाम् | 1017<br>11 | 10472<br>80 |
| | 1028 | 10552 |

ऋग्वेदे शाकलशाखायाम् अष्टकानुसारेण मंत्रसंख्याया: तालिका एवमस्ति-

| अष्टकानाम् | सूक्तानि | वर्गा: | मंत्रा: |
|---|---|---|---|
| प्रथमाष्टकस्य | 121 | 265 | 1370 |
| द्वितीयाष्टकस्य | 119 | 221 | 1147 |
| तृतीयाष्टकस्य | 122 | 225 | 1209 |
| चतुर्थाष्टकस्य | 140 | 250 | 1289 |
| पञ्चमाष्टकस्य | 129 | 238 | 1263 |
| षष्ठाष्टकस्य | 124 | 313 | 1650 |
| सप्तमाष्टकस्य | 116 | 248 | 1263 |
| अष्टमाष्टकस्य | 146 | 246 | 1281 |
| | 1017 | 2006 | 10472 |
| वालखिल्यसूक्तानाम् | 11 | 8 | 80 |
| | 1028 | 2014 | 10552 |

ऋग्वेदान्तर्गतशाकलसंहिताया: अष्टमे मण्डले अष्टचत्वारिंशत्तमसूक्तोत्तरम् एकादशसूक्तानि वालखिल्याख्यानि विद्यन्ते। पठनपाठनपरंपरायां सर्वत्र तानि भारतवर्षे अध्यापकै: शाकलसंहितान्तर्गतसूक्तान्तराणीव सस्वराण्यध्याप्यन्ते, अध्येतृभि: च तथैव अभ्यस्यन्ते इति सर्वविदितम्। एषां वालखिल्यसूक्तानां तत्संहितान्तर्गतेतरांशवदेव महत्ता न तु तत: अल्पमपि न्यूना इत्यत्र न स्यात् कस्यचिद् अवसर: संदेहलेशस्यापि। शाकलसंहितापदपाठे तेषामपि सूक्तानां पदपाठो वर्तते एव।

ऋग्वेदे गायत्र्युष्णिगादि अनेकानिच्छन्दांसि सन्ति। तेषां नामानि-गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति:, त्रिष्टुप्, जगती, अतिजगती, शक्वरी, अतिशक्वरी, अष्टि:, अत्यष्टि:, धृति:, अतिधृति:, द्विपदा गायत्री, द्विपदा विराट्, द्विपदा त्रिष्टुप्, द्विपदा जगती, एकपदा विराट्, एकपदा त्रिष्टुप् इति।

प्रथमे मण्डले मधुच्छन्दावैश्वामित्राद्यृषय:, द्वितीयं मण्डलं गृत्समद: अपश्यत्, तृतीयस्य विश्वमित्र ऋषि:, वामदेवो गौतम: चतुर्थं मण्डलम् अपश्यत्, आत्रेय: पञ्चमस्य

मण्डलस्य ऋषिः, बार्हस्पत्यो भरद्वाजः षष्ठं मण्डलमपश्यत्, सप्तमं मण्डलं वसिष्ठः, अपश्यत्, अष्टमस्य मण्डलस्य काण्वाद्यृषयः, नवमस्य मधुच्छन्दा वैश्वामित्राद्यृषयः, दशमस्य त्रित आप्त्याद्यृषयः सन्ति।

ऋग्वेदे प्राधान्येन इन्द्रस्तुतिः, अग्नेः स्तुतिः च वर्तते। नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम्। तत्र सोमविषयकमंत्राः सन्ति, पवमानः सोमः।

**३. ऋक्शब्दस्य व्युत्पत्तिः-**

"अर्च्यते प्रशस्यते अनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वा इति ऋक्शब्दस्य व्युत्पत्तिः"। इति ऋग्वेदभाष्यभूमिकायां सायणाचार्यैः कथितम्।

भगवता जैमिनिना ऋचो लक्षणम् एवं कृतमस्ति- "नियताक्षरपादावसाना ऋक्" (पृ. 20) इति।

पुनश्च सायणाचार्येण ऋगादिलक्षणप्रसङ्गे ऋग्वेदभाष्यभूमिकायाम् एवं प्रतिपादितम्- "पादेन अर्थेन चोपेता वृत्तबद्धा मंत्रा ऋचः"।

**४. ऋग्वेदस्य महत्त्वम्-**

(1) ऋग्वेदे अर्थप्रकाशनेन सह प्रत्येकं पादे विरामो निश्चितः। इयं प्रक्रिया ऋग्वेदादेव लौकिककवितासु समागता अस्ति।

(2) भारतीय वाङ्मये यत्र कुत्रापि वेदानां प्रसङ्गो दृश्यते तत्र ऋग्वेदस्य एव अभ्यर्हितत्वं दृश्यते। यथा च वाजसनेयसंहितायाम्- "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" (वा.सं. 31.7) इति।

एवमेव तैत्तिरीयसंहितायाम् ऋचां महत्त्वं वर्णितम्- " यद्वै साम्ना यजुषा क्रियते शिथिलं तद् यद् ऋचा तद् दृढम् (तै.सं. 6.5.10.3) इति।

छन्दोगाः एवम् आमनन्ति- "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्" (छा.उ. 7.1.2) इति।

मुण्डकोपनिषदि श्रूयते- "ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः"

(मु.उ. 1.1.5) इति।

(3) अन्येषु तत्तत्स्थलेषु ऋचां दर्शनं भवति, तेषां मंत्राणाम् ऋक्त्वेन व्यवहारोऽपि भवति। यजुर्वेदे अनेकत्र ऋचो दृश्यन्ते। अथर्ववेदे ऋग्वेदस्य 1,200 मंत्राः दृश्यन्ते।

सामवेदे पञ्चसप्ततिमंत्रान् विहाय सर्वे मंत्राः ऋग्वेदस्य एव सन्तीति स्पष्टमेव ऋचां माहात्म्यम्।

(4) पाश्चात्या अपि पुराणविज्ञान (Mythology) दृष्ट्या ऋग्वेदस्य महत्त्वं स्वीकुर्वन्ति।

**५. अश्विनोः सूक्तस्य प्रथममंत्रस्य पाठः-**

**नासत्याभ्यां बर्हिरिव प्रवृञ्जे स्तोमां इयर्म्यभ्रियेव वातः।**
**यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन॥१॥**

**५.१ अश्विनोः सूक्तस्य प्रथममंत्रस्य पदपाठः-**

नासत्याभ्याम्। बर्हिःऽइव। प्र। वृञ्जे। स्तोमान्। इयर्मि। अभ्रियाऽइव। वातः।
यौ। अर्भगाय। विऽमदाय। जायाम्। सेनाऽजुवा। निऽऊहतुः। रथेन॥1॥

**५.२ अश्विनोः सूक्तस्य प्रथममंत्रस्य अन्वयः-**

यौ सेनाजुवा रथेन अर्भगाय विमदाय जायां न्यूहतुः नासत्याभ्यां स्तोमान् वातः अभ्रियेव इयर्मि बर्हिरिव प्र वृञ्जे।

**५.३ अश्विनोः सूक्तस्य प्रथममंत्रस्य भावार्थः-**

यौ अश्विनौ सेनया सह गन्त्रा स्वसेनापरिवृतेन इत्यर्थः, स्वेन रथेन बालाय विमदाय राजर्षये परैरनुक्रान्तां भार्यां शत्रून्निहत्य तद्गृहं प्रति न्यूढवन्तौ। अहम् अश्विभ्यां स्तुतीः संपादयामि, यथा अभ्रेषु मेघेषु अवस्थितानि उदकानि वायुः वर्षाणार्थं बहुशः प्रेरयति। यथा कश्चिद् यजमानो यागार्थं बर्हिः प्रकर्षेण अन्यूनातिरिक्तं यागाय पर्याप्तं दर्भं छिनति संपादयति एवम् अहमपि संपादयामि।

**६. अश्विनोः सूक्तस्य द्वितीयमंत्रस्य पाठः-**

**वीळपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना॥**
**तद् रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय॥२॥**

**६.१ अश्विनोः सूक्तस्य द्वितीयमंत्रस्य पदपाठः-**

वीळपत्मऽभिः। आशुहेमऽभिः। वा। देवानाम्। जूतिऽभिः। शाशदाना॥
तत्। रासभः। नासत्या। सहस्रम्। आजा। यमस्य। प्रऽधने। जिगाय॥2॥

**६.२ अश्विनोः सूक्तस्य द्वितीयमंत्रस्य अन्वयः-**

नासत्या वीळपत्मभिः आशुहेमभिः वा देवानां जूतिभिः वा शाशदाना रासभः तत् सहस्रं आजा यमस्य प्रधने जिगाय।

### ६.३ अश्विनोः सूक्तस्य द्वितीयमंत्रस्य भावार्थः-

अत्रेयमाख्यायिका-प्रजापतिः सवितुः दुहितरं सूर्यां सोमाय राज्ञे प्रायच्छत्। ये त्वन्ये देवाः तां वरयितुम् आगच्छन्, तेभ्यो विवाहादनन्तरम् ऋक्सहस्रम् अददात्, यदेतत् आश्विनं नाम। तस्मिन् देवाः विवादमकुर्वन्, मम इदमस्तु, इति। ततः ते अब्रुवन् आजिं धावाम, यो नो जेष्यति तस्य इदं भविष्यति इति। ते अग्नेः गृहपतेः उपरि आदित्यं काष्ठां कृत्वा अभ्यधावन्। काष्ठा आज्यन्त उच्यते। अश्वतरीरथेन अग्निः आजिमधावत्। तदेतद् इह उच्यते-

हे नासत्यौ! वीळु दृढं पत्म पतनं येषाम्। सन्ततमपि गच्छतां येषां गतिः न हीयते इत्यर्थः। ते वीळुपत्मानः अश्विनोः स्वभूताः रासभाः। तैः वीळुपत्मभिः आशुहेमभिः शीघ्रगामिभिः वाशब्दः अत्र चार्थे। देवानां च गमनैः तैः शाशद्यमानयोः गमनशीलयोः द्वयोः स्वभूतो गर्दभः रथे नियुक्तः सन् तत् सहस्रम् अस्मिन्मंत्रे तच्छब्दश्रुतेः उक्तेतिहासार्थयुक्तो यच्छब्दः अध्याहार्यः। यत्सूर्याविवाहानन्तरं प्रजापतिः देवेभ्यः अदात् तत्सहस्रम् ऋचाम्। अश्वादेः धावनभूमौ, तमसां यमनाद् यमः आदित्यः इह उच्यते, तस्य संबन्धिन्याम्। कः पुनः आदित्यस्य आजिसंबन्धः इति प्रश्ने सति उच्यते आदित्यः तस्या अन्तः आसीत्। तथा च ऐतरेयब्राह्मणे श्रूयते- तेऽग्नेर्गृहपतेरुपर्यादित्यं काष्ठामकुर्वत (ऐ.ब्रा. 4.7) इति। अग्निः गृहपतिः इति वाजसनेयसंहितायाम् (2.27) अपि दृश्यते। संग्रामे, अग्न्यादिभिः सह संस्पर्धायां बलस्य प्रख्यापने युद्धे जितवान्।

### ७. अश्विनोः सूक्तस्य तृतीयमंत्रस्य पाठः-

**तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः॥**
**तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः॥**

### ७.१ अश्विनोः सूक्तस्य तृतीयमंत्रस्य पदपाठः-

तुग्रः। ह। भुज्युम्। अश्विना। उदऽमेघे। रयिम्। न। कः। चित्। ममृऽवान्। अव। अहाः॥
तम्। ऊहथुः। नौभिः। आत्मन्ऽवतीभिः। अन्तरिक्षप्रुत्ऽभिः। अपऽउदकाभिः॥3॥

### ७.२ अश्विनोः सूक्तस्य तृतीयमंत्रस्य अन्वयः-

अश्विना तुग्रः ह भुज्युम् उदमेघे रयिं न कः चित् ममृवान् अव अहाः तम् आत्मन्वतीभिः अन्तरिक्षप्रुद्भिः अपोदकाभिः नौभिः ऊहथुः।

**७.३ अश्विनोः सूक्तस्य तृतीयमंत्रस्य भावार्थः-**

हे अश्विनौ! तुग्रपुत्रं, ह इति पदपूरणः, भुज्युं राजानम्, उदकेन सिञ्चति सिच्यते वेति उदमेघः समुद्रः तत्र। यथा धनं कश्चित् म्रियमाणो जहाति एवं विपन्ननावं सन्तं परित्यक्तवन्तः सखायः। कुत एतत्। 'उत त्यं भुज्युमश्विना' (ऋ.सं. 7.68.7) इति मंत्रान्तरे दर्शनात्। तं भुज्युं युवाम् आत्मसंयुक्ताभिः स्वयमेव इत्यर्थः, अन्तरिक्षगामिनीभिः उदकमसंस्पृशन्तीभिः इव गच्छन्तीभिः इत्यर्थः, व्यपगतोदकाभिः मनाग् अपि उदकेन अभिद्यमानाभिः इत्यर्थः, नौभिः तटं प्रापितवन्तौ उत्तारितवन्तौ इत्यर्थः।

**८. अश्विनोः सूक्तस्य चतुर्थमंत्रस्य पाठः-**

**तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः।**
**समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः॥४॥**

**८.१ अश्विनोः सूक्तस्य चतुर्थमंत्रस्य पदपाठः-**

तिस्रः। क्षपः। त्रिः। अहा। अतिव्रजत्ऽभिः। नासत्या। भुज्युम्। पतङ्गैः॥
ऊहथुः। समुद्रस्य। धन्वन्। आर्द्रस्य। पारे। त्रिभिः। रथैः। शतपद्भिः। षडश्वैः॥4॥

**८.२ अश्विनोः सूक्तस्य चतुर्थमंत्रस्य अन्वयः-**

तिस्रः क्षपः त्रिः अहा अतिव्रजद्भिः नासत्या भुज्युं पतङ्गैः ऊहथुः समुद्रस्य धन्वन् आर्द्रस्य पारे त्रिभिः रथैः शतपद्भिः षडश्वैः।

**८.३ अश्विनोः सूक्तस्य चतुर्थमंत्रस्य भावार्थः-**

न च केवलाभिः नौभिः युवां भुज्युं तटं प्रापितवन्तौ उत्तारितवन्तौ। किं तर्हि। तिस्रो रात्रीः त्रीणि चाहानि सातत्येन अतिव्रजद्भिः सुष्ठु गच्छद्भिः, हे नासत्यौ! युवां भुज्युं पतङ्गैः अश्वैः ऊढवन्तौ। क्व प्रदेशे इति प्रश्ने सति उच्यते समुद्रस्य एकदेशभूते धन्वनि निरुदके प्रदेशे, सोदकः प्रदेशः आर्द्रः, तस्य पारे अन्ते। समुद्रस्य मध्ये या उदकेन परिक्षिप्ता भूमयः तासु इत्यर्थः। न च केवलैः अश्वैः। किं तर्हि। रथैश्च त्रिभिः। द्वाभ्याम् आत्मनोः यानाभ्याम् एकेन भुज्योः। कीदृशैः शतपादैः शतगमनसाधनैः शतसंख्याकैः चक्रलक्षणैः षड्भिरश्वैर्युक्तैः।

**९. अश्विनोः सूक्तस्य पञ्चममंत्रस्य पाठः-**

**अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे॥**
**यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम्॥५॥**

**९.१ अश्विनोः सूक्तस्य चतुर्थमंत्रस्य पदपाठः-**

अनारम्भणे। तत्। अवीरयेथाम्। अनास्थाने। अग्रभणे। समुद्रे।।
यत्। अश्विनौ। ऊहथुः। भुज्युम्। अस्तम्। शतऽअरित्राम्। नावम्। आतस्थिऽवांसम्।।5।।

**९.२ अश्विनोः सूक्तस्य पञ्चममंत्रस्य अन्वयः-**

अश्विना अनास्थाने अनारम्भणे अग्रभणे समुद्रे शतारित्रां नावम् आतस्थिवांसं भुज्यं, यत् अस्तम् ऊहथुः तत् अवीरयेथाम्।

**९.३ अश्विनोः सूक्तस्य पञ्चममंत्रस्य पाठः-**

हे अश्विनौ! यस्मिन् ईषत् अपि स्थातुं न शक्यते सः अनास्थानः तत्र। आरभ्यतेऽस्मिन्निति आरम्भणमालम्बनमुच्यते तत्र निरालम्बने न च अनारम्भणे एव केवले। किं तर्हि। ग्रहीतुमपि यस्मिन्न शक्यते सः अग्रभणः लताशाखादिरहितः तत्र। क्व उच्यते। समुद्रे। अर्यते अनेन इति अरित्रं नावो गमनसाधनं, शतारित्रां शतदर्विकां नावम् आतस्थितवन्तं भुज्युं यद् युवाम् अश्विनौ स्वगृहं न्यूहथुः तद् युवां वीरकर्म कृतवन्तौ स्थः। अस्तमिति गृहनामसु पठितम्।

**१०. अश्विनोः सूक्तस्य षष्ठमंत्रस्य पाठः-**

**यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित् स्वस्ति॥**
**तद् वां दात्रं महि कीर्तेन्यं भूत् पैद्वो वाजी सदमिद्धव्यो अर्यः॥६॥**

**१०.१ अश्विनोः सूक्तस्य पञ्चममंत्रस्य पदपाठः-**

यम्। अश्विना। ददथुः। श्वेतम्। अश्वम्। अघऽअश्वाय। शश्वत्। इत्। स्वस्ति।।
तत्। वाम्। दात्रम्। महि। कीर्तेन्यम्। भूत्। पैद्वः। वाजी। सदम्। इत्। हव्यः। अर्यः।।6।।

**१०.२ अश्विनोः सूक्तस्य पञ्चममंत्रस्य अन्वयः-**

अश्विना यं श्वेतम् अश्वम् अघाश्वाय ददथुः तद् वां दानं महत् कीर्तेन्यं भूत् पैद्वः वाजी सदम् इत् हव्यः अर्यः।

**१०.३ अश्विनोः सूक्तस्य पञ्चममंत्रस्य भावार्थः-**

अत्र इतिहासमाचक्षते- 'अघाश्वो नाम राजा युयुत्सुः आत्मनः अश्वम् अश्विनौ ययाचै, सततं च अविनाशम्। तस्मै अश्विनौ बलवन्तमत्यन्तवेगिनं जयकरं सर्वत्राप्रतिहतगमनम् अश्वं सततं चाविनाशं ददतुः इति। तत् इह उच्यते। हे अश्विनौ! युवाम् अघाश्वाय यं श्वेतम् अश्वं दत्तवन्तौ। शश्वदिति नित्यपर्यायः। इत् शब्दः पदपूरणः चार्थे वा, नित्यं च स्वस्ति अविनाशम्, तद् युवयोः दानं महत् कीर्तनार्हम् अभूत्। यस्मात् पैद्वः अश्वनामैतत्, बलवान् सदैव च संग्रामेष्वाह्वातव्यः। अथवा सदमित्येतत् वाजीत्येतेन संबध्यते। वाजशब्दश्च वेगवचनः, वेगवान् सदैव, हव्यश्च संग्रामेषु इति। अर्यः ईश्वरश्च। क्व। सामर्थ्याद् गमने। सर्वत्राप्रतिहतगतिः इत्यर्थः।

**११. विषयसंग्रहः-**

भारतीय वाङ्मये वेदानां स्थानं महत्त्वपूर्णं वर्तते। द्वापरान्ते भगवता कृष्णद्वैपायनेन वेदविभजनं कृतम्। कृष्णद्वैपायन एव व्यास इति नाम्ना प्रख्यातः अभूत्। ऋग्वेदस्य एकविंशतिः शाखाः सन्ति इति महाभाष्ये दृश्यते।

ऋग्वेदस्य प्रथममण्डलस्य षोडशाधिकैकशततमं सूक्तम् 'अश्विनोः सूक्तम्' इति नाम्ना व्यवहियते। अस्मिन् सूक्तेः अश्विनोः माहात्म्यं दृश्यते। अश्विनौ देवानां भिषजौ वैद्यौ स्तः। 'नासत्यौ' इत्यपि अश्विनोः नामनी। तौ दर्शनीयौ स्तः तस्मात् 'दस्रौ' इत्यपि अश्विनोः नामनी।